॥ श्रीः ॥

आर्यसंगीतसंस्कृतग्रंथाः

# १ रागतरंगिणी ।

# २ रागतत्त्वविबोधः ।

# ३ रागमंजरी ।

प्रकाशक

भालचन्द्र सीताराम सुकथनकर, एम्.ए., एल्.एल्.बी.

शके १८४० सन १९१८

॥ श्रीः ॥

श्रीलोचनपंडितविरचिता

# रागतरंगिणी।

एतत्पुस्तकम्

पुण्यपत्तनस्थपंडितदत्तात्रेयकेशवजोशीत्यभिधेन

यथामति संशोधितम्।

तच्च

## भालचन्द्रशर्मणा

आर्यभूषणाख्यमुद्रालये मुद्राक्षरैरंकयित्वा

प्राकाश्यं नीतम्।

शकः १८४० सन् १९१८

अस्य ग्रन्थस्य मुद्रणे यद्धनमपेक्षितं तत्सकलमपि
श्रीमन्महीशूरयुवराजमहाशयैः 'सर के. नरसिंह-
राज वडियार जी. सी. आय्. ई.'
इति लक्षणांकितैः परमो-
दारचरितैरदायि ।

Printed at the Arya-Bhushan Press, Poona, City,
by Anant Vinayak Patvardhan,
AND
Published by Bhalchandra Sitaram Sukthankar, M. A, LL. B.,
at 2 Malabar Hill, Bombay.

# प्रस्तावना.

हिंदुस्थानी अथवा उत्तरेकडील संगीत पद्धतीच्या उपलब्ध संस्कृत ग्रंथांपैकीं लोचनपंडितानें लिहिलेला रागतरंगिणी हा एक ग्रंथ आहे. या ग्रंथकारानें आणखीही कांहीं ग्रंथ लिहिले आहेत, असें या ग्रंथांतल्या एक दोन ठिकाणच्या उक्तींवरून दिसून येतें. हा तरंगिणी ग्रंथ मुख्यतः छंदःशास्त्रावर आहे असें समजतें. त्याची हस्तलिखित प्रत अलाहाबादचे श्री. गुप्ताबाबू यांजकडे होती. त्या नकलेंतून संगीत-विषयक भाग आमचे मित्र पंडित श्रीकृष्ण जोशी, गव्हर्मेंट पेन्शनर व हल्लीं नाभासंस्थानचे होममेंबर, यांनीं उतरून घेऊन आम्हांस मेहेर-बानी करून प्राप्त करून दिला याबद्दल आम्हीं त्या पंडितांचे फार आभारी आहों. मूळ ग्रंथ मिथिल व संस्कृत या भाषांत आहे असे ते पंडित सांगतात.

तरंगिणीकारानें स्वतःविषयीं माहिती ग्रंथांत दिलेली नाहीं. ग्रंथा-च्या शेवटीं दिलेल्या " भुजवसुदशमितशाके " इत्यादि आर्येनें ग्रंथ-काराचा काल ठरवूं म्हटलें तर तो शक १०८२ होतो. परंतु तो काळ खरा मांनण्यास कांहीं अडचणी उत्पन्न होतात. त्या अशा; ग्रंथकारानें आपल्या 'तरंगिणी' ग्रंथांत विद्यापतीच्या श्लोकांचीं उदाहरणें आपले छंद समजावितांना दिलीं आहेत. हा लोकप्रिय कवि इ. स. १४०० च्या पूर्वींचा नाहीं, असें पुराणवस्तुसंशोधकांचें मत आहे. ते शोधक ताम्रपटादिकांच्या साहाय्यानें असें ठरवितात कीं, इ. स. १३९९ मध्यें मिथिलाधिप शिवसिंह यानें विद्यापति कवीस जहागीर दिल्याचा पुरावा आहे. या पुराव्यावरून लोचनपंडित इ. स. १४०० च्या पूर्वींचा नसावा हें उघड आहे. तसेंच 'हृदयनारायणदेव' या नांवाच्या गढादेशच्या राजानें 'रागतरंगिणी' या ग्रंथाचा उपयोग 'हृदयकौतुक' या आपल्या ग्रंथांत केला आहे असें आम्हीं त्या ग्रंथाच्या प्रस्तावनेंत म्हटलेंच आहे. व त्या राजाचा काल इ. स. १६६७ असावा असेंही

आम्हीं तेथें म्हटलें आहे. तेव्हां रागतरंगिणी हा ग्रंथ इ. स. १४०० शेंनंतर व इ. स. १६६७ पूर्वी लिहिला गेला असावा असें सहज ठरवितां येतें. तेव्हां लोचनपंडिताचा 'भुजवसु' इ. हा श्लोक लावावा कसा अथवा त्यांत कांहीं चुकलें आहे कीं काय हें एक मनोरंजक गूढ आहे. 'रागतरंगिणी' ग्रंथांत ईमन, फरोदस्त वगैरे स्पष्ट मुसलमानी रागनामें-ही दृष्टीस पडतात, ही गोष्ट ग्रंथकाल निर्णित करण्यास कांहींशी उपयोगी होईल. कारण, मुसलमानी राजांची कारकीर्द या देशांत स्थापिली जाऊन त्यांचे राग सर्वत्र लोकप्रिय होण्यास शके १०८२ हा काल अनुकूल होईल कीं कसें, हाहि विचार करण्याजोगा प्रश्न आहे.

लोचनपंडितानें 'भुजवसुदशमितशाके' या श्लोकाच्या शेवटीं " मुनयस्त्वासन् विशाखायाम् " असें म्हटलें आहे, व अशाप्रकारें कालगणनेची वहिवाट काश्मीर प्रांताकडे अजून देखील आहे असें ऐकिवांत आहे. तसेंच मिथिला व बंगाल या प्रांतांतला घटिकावाचक शब्द जो " दण्ड " तोही त्यानें आपल्या ग्रंथांत वापरला आहे. यावरून सदर पंडित उत्तरेचा असावा असें अनुमान करण्यास पुष्कळ जागा आहे.

लोचनपंडितानें आपला ग्रंथ सुबोध व सरळ लिहिला आहे; त्यास दक्षिणेकडील ग्रंथ माहीत होते असें दिसतें. कारण, त्याच्या ग्रंथांत कैशिक, काकली व मृदुपंचम हीं नांवें दृष्टीस पडतात. त्यानें या ग्रंथांत जन्यजनकरागांची व्यवस्था सुबोध करून दाखविली आहे. एकंदरींत हा ग्रंथ संगीतशास्त्राचा अभ्यास करणाऱ्यांस उपयुक्त होईल असें आम्हांस वाटतें.

ह्या ग्रंथाचा कालनिर्णय करण्याचे कामीं आमचे मित्र डॉ० विष्णु सीताराम सुकथनकर, एम्. ए., पीएच्. डी., यानीं जें आम्हांस साहाय्य केलें त्याबद्दल आम्हीं त्यांचे फार आभारी आहों.

पुणें,<br>
ता० २२।६।१८ } पंडित दत्तात्रेय केशव जोशी.

॥ श्रीः ॥

# रागतरंगिणी।

श्रीगणेशाय नमः।

अथैषामुत्पत्तिनिदानं नादो निरूप्यते।

नादः।

नाभेरूर्ध्वं हृदिस्थानान्मारुतः प्राणसंज्ञकः।
नदति ब्रह्मरन्ध्रान्ते तेन नादः प्रकीर्तितः॥
आकाशाग्निमरुज्जातो नाभेरूर्ध्वं समुच्चरन्।
मुखेऽतिव्यक्तिमायाति यः स नाद इतीरितः॥
स च प्राणिभवोऽप्राणिभव उभयसंभवः।
आद्यः कायभवो वीणादिभवोऽपि द्वितीयकः॥
तृतीयोऽपि हि वंशादिभव इत्थं त्रिधामतः।
यदुक्तं ब्रह्मणस्थानं ब्रह्मग्रन्थिश्च यो मतः॥
तन्मध्ये संस्थितः प्राणः प्राणाद्वह्निसमुद्भवः॥
न नादेन विना गीतं न नादेन विना स्वरः।
न नादेन विना ज्ञानं न नादेन विना शिवः॥

एतादृशनादमयमूर्छनाधीना च रागोत्पत्तिः।

तदुक्तं स्वरः सम्मूर्छयते यत्र रागतां प्रतिपद्यते।

मूर्छना च गीयमानगीते क्वचिज्जायते इति गीतं निरूप्यते। तंत्राभियुक्ताः।

गीतम्।

धातुमातुसमायुक्तं गीतमित्युच्यते बुधैः।
तत्र नादात्मको धातुर्मातुरक्षरसंभवः॥

अत एव केवलाक्षरसंचये गीतव्यवहारो मातुरिति मन्तव्यम्।

तच्च गीतं द्विविधम्।

गीतं तु द्विविधं प्रोक्तं यंत्रगात्रविभेदतः।
यंत्रं स्याद्वेणुवीणादि गात्रं तु मुखमुच्यते॥

प्रत्येकमेतदपि द्विविधम्।

निबद्धमनिबद्धं च गीतं द्विविधमुच्यते।
अनिबद्धं भवेद्गीतं वर्णादिनियमैर्विना ॥
यद्वा गमकधात्वंगवर्णादिनियमैर्विना।
निबद्धं च भवेद्गीतं तालमानरसाश्रितम् ॥
छंदो गमकधात्वंगवर्णादिनियमैः कृतम्।

गमकाः कंपितादयः। धातुर्नादः। अंगानि पदानि। तेन बिरुदादीनि। तालाश्च चश्चत्पुटचाचपुटादयः। मानं तु प्रसिद्धम्। रसाः शृंगारादयः। छंदांसि एलाझुंबकादीनि।

एतेषां प्रपंचस्तु मत्कृतरागसंगीतसंग्रहेऽन्वेष्टव्यः।

तादृशमपि गीतं द्विविधम्।

मार्गदेशी विभेदेन गीतं तु द्विविधं मतम्।

मार्गास्तु गंधर्वादिगीतगतयः। देश्यश्च तत्तद्रागाश्रितास्तास्तत्तद्देशगीतगतयः। इह तु मार्गाभावान्नोदाहृताः। अग्रे तु क्वचिदुदाहर्तव्याः देश्यामपि स्वदेशीयत्वात्प्रथमं मिथिलापभ्रंशभाषया श्रीविद्यापतिकविनिबद्धास्तास्ता मैथिलगीतगतयः प्रदर्श्यन्ते ॥*

× × × ×

## अथ यंत्रजादिरागसामान्योत्पत्त्युपयुक्तसंस्थितिसाधनीभूतस्वरसंज्ञाप्रकरणम्।

स्वस्वशेषश्रुतिं त्यक्त्वा यदा रिषभधैवतौ।
गीयेते गुणिभिः सर्वैस्तदा तौ कोमलौ मतौ ॥
गृह्णाति मध्यमस्यापि गांधारः प्रथमां श्रुतिम्।
यदा तदा जनैरेष तीव्र इत्यभिधीयते ॥

---

*टीपः—येथें ग्रंथकारानें श्रीविद्यापतीचीं मिथिलभाषेंतील गीतें दिलीं आहेत; परंतु ग्रंथ समजण्यास त्यांचा उपयोग नसल्यानें तीं येथें दिलीं नाहींत.

द्वितीयामपि चेदेवं तदा तीव्रतरः स्मृतः ।
तृतीयामपि चेदेवं तदा तीव्रतमः स्मृतः ॥
चतुर्थीमपि चेदेवमतितीव्रतमः स्मृतः ।
अतितीव्रतमो गस्तु सारंगे परिगीयते ॥
षड्जस्य च निषादश्चेद् गृह्णाति प्रथमां श्रुतिम् ।
तदा संगीतिभिः सोऽपि तीव्र इत्यभिधीयते ॥
द्वितीयामपि चेदेवं तदा तीव्रतरः स्मृतः ।
तृतीयामपि चेदेवं तदा तीव्रतमः स्मृतः ॥
षड्जस्य द्वे श्रुती गृह्णन् निषादः काकली स्मृतः ।
तीव्रतरे निषादेव गेया सैव विचक्षणैः ॥
सपयो रिधयोश्चैव तथैव गनिषादयोः ।
संवादः कथितो विज्ञैर्मसयोः स्वरयोर्मिथः ॥
हृदि मंद्रो गले मध्यो मूर्ध्नि तार इति क्रमात् ।
द्विगुणः पूर्वपूर्वस्मात् स्वरः स्यादुत्तरोत्तरः ॥
× × × श्रुतिनामानि तीव्राकुमुद्वती इ.
वीणायां सर्वरागाणां स्वराणां संस्थितिस्तु या ।
तस्या वादनमात्रेण स्वरव्यक्तिः प्रजायते ॥
तास्तु संस्थितयः प्राच्यो रागाणां द्वादश स्मृताः ।
याभीरागाः प्रगीयन्ते प्राचीना रागपारगैः ॥
भैरवी टोडिका तद्वत् गौरी कर्णाट एव च ।
केदार इमनस्तद्वत् सारंगो मेघरागकः ॥
धनाश्रीः पूरवी किंच मुखारी दीपकस्तथा ।
एतेषामेवसंस्थाने सर्वे रागा व्यवस्थिताः ॥
तत्र यद्रागसंस्थाने ये ये रागा व्यवस्थिताः ।
यथा यद्रागसंस्थानं तत्तथैव वदाम्यहम् ॥

इति संस्थानसंज्ञा प्रकरणम् ।

## ( १ ) भैरवी ।

शुद्धाः सप्तस्वरा रम्या वादनीयाः प्रयत्नतः ।
तेन वादनमात्रेण भैरवी जायते शुभा ॥
अन्ये तु भैरवीरागे धैवतं कोमलं विदुः ।
तदशुद्धं यतस्तादृक् नायं रागोऽनुरंजकः ॥

## ( २ ) टोडी ।

शुद्धाः सप्तस्वराः कार्या रिधौ तेषुच कोमलौ ।
टोडी सुरागिणी ज्ञेया ततो गायकनायकैः ॥

## ( ३ ) गौरी ।

एवं सति च गांधारो द्वे श्रुती मध्यमस्य चेत् ।
गृह्णाति काकली निः स्यात् तदा गौरी प्रवर्तते ॥

अस्यार्थः– रिषभधैवतौ कोमलौ भवतः । गांधारश्च मध्यमस्य श्रुतिद्वयं गृह्णाति । निषादश्च षड्जस्य श्रुतिद्वयं गृह्णाति । तदा गौरी संस्थानं भवति ॥

## ( ४ ) कर्णाटः ।

शुद्धाः सप्तस्वरास्तेषु गांधारो मध्यमस्य चेत् ।
गृह्णाति द्वे श्रुती गीता कर्णाटी जायते तदा ॥

अस्यार्थः– शुद्धेषु सप्तस्वरेषु गांधारो मध्यमस्य श्रुतिद्वयं गृह्णाति तदा कानराख्यातं कर्णाटसंस्थानं भवति ।

## ( ५ ) केदारः ।

एवं सति निषादश्चेत् काकली भवति स्फुटम् ।
वीणायां व्यक्तिमाधत्ते केदारसंस्थितिस्तदा ॥

अस्यार्थः– गांधारो मध्यमस्य श्रुतिद्वयं गृह्णाति । निषादश्च षड्जस्य श्रुतिद्वयं गृह्णाति तदा केदारसंस्थानं भवति ॥

## ( ६ ) ईमनः ।

एवं सति च संस्थाने मध्यमः पंचमस्य चेत् ।
गृह्णाति द्वे श्रुती राग ईमनो जायते तदा ॥

अस्यार्थः—गांधारो मध्यमस्य श्रुतिद्वयं गृह्णाति । निषादश्च षड्जस्य श्रुतिद्वयं गृह्णाति । मध्यमः पंचमस्य श्रुतिद्वयं गृह्णाति तदा ईमनसंस्थानं भवति ।

## ( ७ ) सारंगः ।

एवं सति च गांधारः शुद्धमध्यमतां व्रजेत् ।
तथा शुद्धनिषादः स्यात् सारंगो जायते तदा ॥

## ( ८ ) मेघः ।

धनिषादौ च शार्ङ्गस्य कर्णाटस्य गमौ यदि ।
भवेतां रागराजन्यो मेघरागः प्रजायते ॥

अस्यार्थः— गांधारो मध्यमस्य श्रुतिद्वयं गृह्णाति । मध्यमः पञ्चमस्य श्रुतिद्वयं गृह्णाति । निषादः षड्जस्य श्रुतिद्वयं गृह्णाति । मध्यमः शुद्धो भवति । तदा मेघसंस्थानं भवति ।

## ( ९ ) धनाश्रीः ।

रिषभः कोमलो गस्तु द्वे श्रुती मध्यमस्य चेत् ।
गृह्णाति द्वे श्रुती मश्च पञ्चमस्य विशेषतः ॥
धैवतः कोमलो निश्च षड्जस्य द्वे श्रुती यदा ।
गृह्णाति रागिणी रम्या धनाश्रीर्जायते तदा ॥

अस्यार्थः— रिषभधैवतौ कोमलौ भवतः। गांधारो मध्यमस्य श्रुतिद्वयं गृह्णाति । मध्यमः पंचमस्य श्रुतिद्वयं गृह्णाति । निषादः षड्जस्य श्रुतिद्वयं गृह्णाति । तदा धनाश्रीसंस्थानं भवति ॥

## ( १० ) पूर्वा ।

ईमनस्वरसंस्थाने निषादप्रथमां श्रुतिम् ।
गृह्णाति धैवतश्चैषा पूर्वायाः स्वरसंस्थितिः ॥

अस्यार्थः– गांधारो मध्यमस्य श्रुतिद्वयं गृह्णाति । मध्यमः पंचमस्य श्रुतिद्वयं गृह्णाति । निषादः षड्जस्य श्रुतिद्वयं गृह्णाति । धैवतश्च निषादस्यैकां श्रुतिं गृह्णाति । तदा पूर्वासंस्थानं भवति ॥

भैरवी

## ( ११ ) मुखारी ।

शुद्धाः सप्तस्वरास्तेषु धैवतः कोमलो भवेत् ।
वीणायां जायते शुद्धा मुखारी संस्थितिस्तदा ॥

अस्यार्थः– शुद्धसप्तस्वरेषु चेद्धैवतः कोमलो भवति । तदा मुखारी-संस्थितिर्भवाति ।

## ( १२ ) दीपकः ।

सर्वैर्मिलित्वा दीपकोऽपि लेख्यः ॥

---

## जन्यरागाः ।

### भैरवीसंस्थितौ ।

नीलांबरी सदा गेया भैरवीरागिणीस्थितौ ।

---

### टोडीसंस्थितौ ।

टोडी सुरागिणी कापि स्वस्थितौ सैव गीयते ।

---

### गौरीसंस्थितौ ।

मालवः स्यान्गुणमयः श्रीगौरी च विशेषतः ।
चैतीगौरी तथा प्रोक्ता पहाडीगौरिका पुनः ॥
देशीटोडी देशकारो गौरो रागेषु सत्तमः ।
त्रिवणः स्यान्मूलतानीधनाश्रीश्च वसंतकः ॥
गौरा भैरवरागश्च विभासो रागसत्तमः ।
रामकली तथागेया गुर्जरी बहुली ततः ।
रेवा च भटियारश्च षड्रागश्च थोत्तमः ॥

मालवः पंचमः किंच जयतश्रीश्च रागिणी ।
आसावरी तथा ज्ञेया देवगांधार एव च ॥
सिंधीआसावरी ज्ञेया ज्ञेया गुणकरी तथा ।
गौरीसंस्थानमध्ये तु एते रागा व्यवस्थिताः ॥

---

कर्णाटसंस्थितौ ।

षाडवः कानरो रागो देशी विख्यातिमागतः ।
वागीश्वरीकानरश्च खंमाइची तु रागिणी ॥
सोरठः परजो मारू जैजयंती तथा परा ।
ककुभोऽपि च कामोदः कामोदी लोकमोदिनी ॥
केदारी रागिणी या गौरः स्यात् मालकौशिकः ।
हिंदोलः सुघराई स्यादडानो रागसत्तमः ॥
गारेकानरनामा च श्रीरागश्च सुखावहः ।
कर्णाटसंस्थितावेते रागाः सन्तीति निश्चितम् ॥

---

केदारसंस्थाने ।

केदारस्वरसंस्थाने श्रुतः केदारनाटकः ।
आभीरनाटनामा च गेयो रागस्तथापरः ॥
खंबावती ततो ज्ञेया शंकराभरणस्तथा ।
बिहागराच हम्बीरः श्यामः श्रुतिमनोहरः ॥
छायानटश्च भूपाली ज्ञेया भीमपलासिका ।
कौशिकश्च तथा गेयो मारू रागो विचक्षणैः ॥

ईमनसंस्थाने ।

ईमनस्वरसंस्थाने शुद्धकल्याण ईरितः ।
पूरिया विदिता लोके जयत्कल्याण एव च ॥

---

सारंगसंस्थाने ।

सारंगस्वरसंस्थाने प्रथमा पटमंजरी ।
वृंदावनी तथा ज्ञेया सामंतो बडहंसकः ॥

---

मेघसंस्थाने ।

मेघरागस्य संस्थाने मेघो मल्लार एव च ।
गौडसारंगनाटौ च रागो वेलावली तथा ॥
अलहिया तथा ज्ञेया शुद्धसूहव एव च ।
देशीसूहवदेशाखौ शुद्धनाटस्तथैव च ॥

---

धनाश्रीसंस्थाने ।

धनाश्रीस्वरसंस्थानेधनाश्रीर्ललितस्तथा ।

---

पूर्वासंस्थाने ।

पूर्वायाः स्वरसंस्थाने पूर्वैवपरिगीयते ॥

---

मुखारी संस्थाने ।

मुखारीस्वरसंस्थाने मुखारी परिगीयते ।

---

सर्वेषामथ रागाणां ये येऽनुक्रमतः स्वराः ।
तेषु सर्वस्वरेष्वाद्यः षड्ज इत्यभिधीयते ॥

तथाहि—

सारिगा मपधा निः सः सानिधपमगा रिसा ।
रोहावरोहयोगेन संपूर्णा भैरवी मता ॥

एवं तत्तद्रागस्वरारोहावरोहास्त्वन्यत्र द्रष्टव्याः । इह तु विस्तरभयान्न लिखिताः॥

---

## अथ सकलदेशसाधारणगुणिगणप्रसिद्धरागसंकराः ।

श्रीमद्वेलावलात् गुंडयोगात् कामोदपंचकम् ।
तत्राद्यः, शुद्धयोगात्तु द्वितीयोऽपि च वक्ष्यते ॥
कामोदकेदारियोगात् सामंताख्यो भवेत्स तु, ।
तिलकादिकषड्रागयोगात्तु तिलकादिकः, ॥
कल्याणाद्यो भवेत् गुंडश्रीमदीमनयोगतः, ।
वरारी गुर्जरी गौरी श्यामा चासावरीति च ॥

गांधारसंयुता एताः स्युः षट्राग इतीरितः, ।
गुर्जर्यासावरीयोगाच्छ्रीमद्गुणकरी मता, ॥
शिवराट्मिलनादन्या धन्नाश्रीः कुम्भरीति च, ।
मालश्रीः शुद्धमलारैर्मधुमाधविनिर्मितिः, ॥
हरभूषणशुद्धाभ्यां नट्टनारायणेन च ।
सरस्वत्याः समुत्पत्ति, र्धनाश्रीर्मालवावलैः ॥
गौर्या च बडहंसः, स्यात् कानराद्धवलादपि ।
पूरिया रागिणी सैव मंगलाष्टकशब्दिता ॥
केदाराचलगौरीभिर्लंकादहननामकः, ।
गांधारो गुर्जरी श्यामा रामकर्याथ चेद्भवेत्, ॥
वेलावलकेदाराभ्यां योगतो हरभूषणः, ।
वेलावलकेदारककल्याणैरीमनः स्मृतः, ॥
गौरीआसावरीदेवगिरीभिर्भैरवादपि ।
सिंधुरारागतः प्रोक्तो गांधारः पृथिवीतले, ॥
धनाश्रीः कानरायोगात् वागीश्वर्याख्यरागिणी ।
फिरोदस्तस्तु पूरविगौरीश्यामाभिरेव च, ॥
वराडीवंगपालाभ्यां विभासमिलनादपि ।
अडानारागिणी प्रोक्ता, फिरोदस्तात् धनेन च ॥
कानडायोगतः प्रोक्ता, सहाना कापि रागिणी, ।
मारूधवलकुंमारीधनाश्रीमिलनाद्भवेत् ॥
पट्मंजरी ततः, शुद्धशंकराभरणादपि ।
मल्लारकानराभ्यां च देशाखः समुदीरितः, ॥
गौडसारंगमिलनाद्भवेत् वेलावली भुवि, ।
तत्र सोरठकौरव्यामिलनात् कौमुदी मता, ॥
मारूधवलकेदाराजयत्श्रीमिलनात् भवेत् ।
घंटोलनामको रागः संगीतिभीरुरीकृतः, ॥

पूरवीशैलजादेवगिरिभिर्गुंडयोगतः ।
हारवत्याख्यसंकीर्णा रागिणी लोकदुर्लभा, ॥
धनाश्रीपूरियाभ्यां च भवेत् भीमपलासिका, ।
मालश्रीशुद्धसंयोगात् मल्लारमिलनादपि ॥
खंबावत्याः समुत्पत्तिर्वदन्ति किल गायकाः, ।
शैलजादेशकाराभ्यां टोडीतोऽपि वराडिका, ॥
षड्रागासावरीदेश्यो हेतुर्गंधावरी भवेत्, ।
सरस्वत्यथ मारुश्च केदारापि मनोहरा ॥
बिहागरासमुत्पत्तिनिदानं त्रितयं मतम् , ।
जयत्श्रीदेशकाराभ्यां ललिताद्यलिलावती, ॥
मालवाचलगौरीभिः त्रिवणामिलनान्मतः ।
गुणिगोष्ठीषु विख्यातः कोऽपि रागो मनोहरः, ॥
हंमीर ईमनात् शुद्धकेदारायोगतः स्मृतः, ।
पूर्या श्रीरागयुक्ता चेत् कानरा किंचिद्देशतः ॥
भैरवात् किंचिदादाय तदा टंकः प्रवर्तते, ।
मल्लारमिलनात् किंचित् केदारानागकध्वनिः, ॥
गूजर्या देशकारश्चेत् कल्याणोऽपि युतो भवेत् ।
अहीरी रागिणी रम्या तदैव भुवि जायते, ॥
शंकराभरणो नाटः सोरटी संगतौ यदि ।
तदा तु रभसादिः स्यान्मंगला कापि रागिणी, ॥
गांधारी गुर्जरी तद्वत् बंगाली पंचमस्तथा ।
भैरवीसंयुतैरेतैर्भवेत् सौराष्ट्रनामकः, ॥
खंमारी पूरियाटोडीयोगान्नारायणो मतः, ।
मनोहरयुतस्तद्वत् मालवो राजहंसकः, ॥
मालश्रीशुद्धटंकैस्तु भवेद्भीमपलासिका, ।
श्रीमन्मालवगांधारबडहंसैर्युतो हरः ॥

षड्रागधवलहंसैर्देशीटोडीयुतैर्भवेत्, ।
पूरवी शुद्धसारंगैर्देवगिर्यपि रागिणी, ॥
कानरायुतकल्याणसंयुताचेत् बिहागरा ।
तदा तु गीतिविख्यातः रागः कोलाहलो मतः, ।
शंकराभरणोपेतमालश्रीसंयुतो यदि ।
श्रीरागः सुखदः कोऽपि भवेत् श्रीरमणस्तदा, ॥
केदारापूरवीवेलावलीभिः ककुभा मता, ।
सरस्वत्या तु कुंमारी मालश्रीयोगतोऽपि च, ॥
देवकारी भवेत् कोऽपि कदाचिच्छ्रूयते तु सा, ।
श्यामारामकरीभ्यां च श्रीमद्गांधारयोगतः ॥
बहुलोपेतगुर्जर्या मंगलोपेतगुर्जरी, ।
वराडीगौरिका चेत्यः श्रीपूर्वरमणोऽपि च ॥
एतेषां संकरात्कापि विचित्रा नाम रागिणी, ।
गौरीललितयोर्देशकारसंयोगतः किल ॥
त्रिवणानामको रागः संगीतीगीतिसत्तमः, ।
अडानाकानरावेलावलीभिर्नटपूर्वकात् ॥
नारायणात् समाख्याता कुलाई नाम रागिणी, ।
पूरियामधुमाधवीयोगाद्वागीश्वरी मता ॥
बडहंसटंकगौरीश्रीरागो रागसत्तमः ।
पूर्यावेलावली तद्वत् ककुभापि केदारिका ॥
एषां परस्परं योगात् दाक्षिणनाटोऽपि सत्तमः, ।
शंकराभरणं गौरी मधुपूर्वा च माधवी ॥

वेलावली परस्तद्वद् दहनोलंकपूर्वकः ।
नारायणो भवेद्रागः सुरलोकेऽपि दुर्लभः ॥
ललितपंचमपूर्वाभिः लीलावतिमनोहरी ।
युतौ चेत्तत्र हिंदोलः तदैव किल जायते, ॥
श्रीमत्कल्याणकामोदसामंतैर्मेघरागकः, ।
मल्लारनटसारंगास्तद्वत् वेलावली किल ॥
देवगिर्यास्तु संयोगादेतेषां पंचमः स्मृतः, ।
हिंदोलादर्धमर्धार्धं कानराागतोऽपि च ॥
पुरियातोऽपि तावत्तु स्यात् समादाय भैरवः,
शंकराभरणात् तद्वत् कानरामधुमाधवी ॥
एतावद्योगतः प्रोक्ता कमरासत्सुखावहा ।
केदाराहिरनाटौ च शुद्धो धवल एव च ॥
वागेश्वरीकानरश्च योगात् स्यात् मधुमाधवी ।
लंकादहनसोरठीसंकरात् किल जायते ॥
शक्रसंक्रमणी नाम रागिणी तु सुखावहा ।

इति सकलसंगीतसिद्धा रागसंकराः ।

## समयाः ।

रागाणां गानकालाः । तुम्बुरुनाटके ।

श्रीपंचमीं समारभ्य यावत्स्यात् शयनं हरेः।
तावद्वसंतरागस्य गानमुक्तं मनीषिभिः ॥
इंदूत्थानं समारभ्य यावद्दुर्गामहोत्सवम् ।
प्रातर्गेयस्तु देशाखो ललितः पटमंजरी ॥
विभासो भैरवी चैव कामोदो गुंडकर्यपि ।
एका वराडि मध्याह्ने सायं कर्णाटमालवौ ॥

नाटश्चैव विशेषेण शेषगेयस्तु सर्वदा ।
हिंदोलश्च वसंतश्च वसंते रक्तिदायकः ॥
नाटो गौडी वराडीच गुर्जरी देशिरेव च ।
पूर्वाह्ले गानमेतेषां निषिद्धमिति तद्विदः ॥
नैवापराह्ले गातव्यौ भैरवीललितौ क्वचित् ।
दशदंडात्परं रात्रौ सर्वेषां गानमीरितम् ॥
रंगभूमौ नृपाज्ञायां कालदोषो न विद्यते ।
शुद्धसालगसंकीर्णधातुमातुविभेदतः ॥
देशभाषाविभेदाश्च रागसंख्या न विद्यते ।
न रागाणां न तालानामंतः कुत्रापि विद्यते ॥
यथा काले समारब्धं गीतं भवति रंजकम् ।
अतः स्वरस्य नियमाद् रागेऽपि नियमः कृतः ॥

अर्वाचीनास्तु ।

ब्राह्मे मुहूर्ते गातव्यो भैरवो रागसत्तमः ।
अरुणोदयवेलायां गेया रामकरी पुनः ॥
प्रातर्वेलावली गेया पूर्वाह्लेसुभगोऽपि च ।
पूर्वाह्लेयाति गायेत्तां तोडी मतिमनोहराम् ॥
शंकराद्रौ वराडी च गेया गायकनायकैः ।
दिवा तृतीयप्रहरे गातव्यासावरी जनैः ॥
काफी मध्याह्लमध्ये तु सारंगोऽपि च गीयते ।
अपराह्ले नटो ज्ञेयस्तद्वत् गायेत्तु मालवम् ।
अपराह्लावसाने वा सायाह्ले सति याति वा ।
सायंकालस्तु कालो वै गौरीरागस्य भूतले ।
निशामुखे तु कल्याणः केदारस्तु महानिशि ॥
द्वितीयप्रहरे रात्रौ कर्णाटः सर्वसंमतः ।
तृतीयप्रहरे रात्रावडानोऽपि च गीयते ॥

अपराह्णेऽपि सौराष्ट्रः प्रभाते संगवेऽपि च ।
पंचमो मेघसंचारे मल्लारः परिकीर्तितः ॥

अलं वा बहुभिः ।

---

भुजवसुदशमितशाके—

श्रीमद्बल्लालसेनराज्यादौ ।

वर्षैकषष्टिभोगे

मुनयस्त्वासन् विशाखायाम् ॥

इति लोचनपंडितविरचिता रागतरंगिणी समाप्ता ॥

॥ शुभं भवतु ॥

समाप्तम्

# रागतरंगिणीगतस्वरपत्रकम् ।

| श्रुतिनामानि | शुद्धस्वराः | विकृतस्वराः |
|---|---|---|
| १ तीव्रा | | तीव्रनिषादः |
| २ कुमुद्वती | | (१२) तीव्रतरनिषादः काकलीनिषादः |
| ३ मंदा | | तीव्रतमनिषादः मृदुषड्जः |
| ४ छंदोवती | (१) षड्जः | |
| ५ दयावती | | |
| ६ रंजनी | | (८) कोमलरिषभः |
| ७ रतिका | (२) ऋषभः | |
| ८ रौद्री | | |
| ९ क्रोधा | (३) गांधारः | |
| १० वज्रिका | | तीव्रगांधारः |
| ११ प्रसारिणी | | (९) तीव्रतरगांधारः अंतरगांधारः |
| १२ प्रीतिः | | तीव्रतमगांधारः |
| १३ मार्जनी | (४) मध्यमः | अतितीव्रतमगांधारः |
| १४ क्षितिः | | तीव्रमध्यमः |
| १५ रक्ता | | (१०) तीव्रतरमध्यमः |
| १६ संदीपिनी | | तीव्रतममध्यमः मृदुपंचमः |
| १७ आलापिनी | (५) पंचमः | |
| १८ मदंती | | |
| १९ रोहिणी | | (११) कोमलधैवतः |
| २० रम्या | (६) धैवतः | |
| २१ उग्रा | | |
| २२ क्षोभिणी | (७) निषादः | |

# रागतरंगिणीगतजनकजन्यरागपत्रकम् ।

| संस्थाननामानि. | | जन्यरागनामानि. |
|---|---|---|
| १ भैरवी | ( १ ) | भैरवी, नीलांबरी. |
| २ टोडी | ( १ ) | टोडी. |
| ३ गौरी | (२७) | गौरी, मालवः, श्रीगौरी, चैतीगौरी, पहाडीगौरी, देशीटोडी, देशकारः, गौडः, त्रिवणः, सूलतानीधनाश्रीः, वसंतकः, गौरा, भैरवः, बिभासः, रामकली, गुर्जरी, बहुली, रेवा, भटियारः, षट्रागः, मालश्रीः, पंचमः, जयतश्रीः, आसावरी, देवगांधारः, सिंधीआसावरी, गुणकरी. |
| ४ कर्णाटः | (२०) | कर्णाटः, कानरः, देशी, वागीश्वरीकानरः, खमाइची, सोरटः, परजः, मारूः, जैजयंती, ककुभः, कामोदः, कामोदी, केदारी, गौरः, मालकौशिकः, हिंडोलः, सुघराई, अडानः, गारेकानरः, श्रीः. |
| ५ केदारः | (१३) | केदारः, केदारनाटकः, आहीरनाटः, खंबावती, शंकराभरणः, विहागरा, हंमीरः, श्यामः, छायानट्टः, भूपाळी, भीमपलासिका, कौशिकः, मारूः. |
| ६ ईमनः | ( ४ ) | ईमनः, शुद्धकल्याणः, पूरिया, जयत्कल्याणः. |
| ७ सारंगः | ( ५ ) | सारंगः, पटमंजरी, वृंदावनी, सामंतः, बडहंसकः. |
| ८ मेघः | (१०) | मेघः, मल्लारः, गौडसारंगः, नाटः, वेलावली, अलहिया, शुद्धसूहवः, देशीसूहवः, देशाखः, शुद्धनाटः. |
| ९ धनाश्रीः | ( २ ) | धनाश्रीः, ललितः. |
| १० पूर्वी | ( १ ) | पूर्वी. |
| ११ मुखारी | ( १ ) | मुखारी. |
| १२ दीपकः | ( १ ) | दीपकः. |

## संगीतोपयोगी ग्रंथमालिका.

१. श्रीमल्लक्ष्यसंगीतम् ... ... ( संस्कृत )
२. श्रीमद्रागकल्पद्रुमांकुरः ... ... ( ,, )
३. रागचंद्रिका ... ... ... ( ,, )
४. अष्टोत्तरशततालक्षणम् ... ( ,, )
५. संगीतसारामृतोद्धारः ... ... ( ,, )
६. सद्रागचंद्रोदयः ... ... ( ,, )
७. अभिनवतालमंजरी ... ... ( ,, )
८. रागलक्षणम् ... ... ... ( ,, )
९. चत्वारिंशच्छतरागनिरूपणम् ... ( ,, )
१०. रागमाला ... ... ... ( ,, )
११. संगीतसुधाकरः ... ... ( ,, )
१२. हृदयकौतुकम् ... ... ( ,, )
१३. हृदयप्रकाशः ... ... ... ( ,, )
१४. रागतरंगिणी ... ... ... ( ,, )
१५. रागतत्वबोधः ... ... ... ( ,, )
१६. रागमंजरी ... ... ... ( ,, )
१७. स्वरमेलकलानिधिः ( मराठी भाषांतरासह )
१८. संगीतदर्पणम् ... ( गुजराथी भाषांतरासह )
१९. संगीतरत्नाकरः ... ( ,, ,, )
२०. स्वरमालिका ... ( ,, ,, )
२१. रागविबोधप्रवेशिका .... ... ( मराठींत )
२२. पारिजातप्रवेशिका ... ... ( ,, )
२३. गीतमालिका ( भाग १-९ हिंदी भाषेंत )
२४. हिंदुस्थानी संगीतपद्धति ( भाग १ मराठींत
२५. हिंदुस्थानी संगीतपद्धति ( भाग २ मराठींत
२६. हिंदुस्थानी संगीतपद्धति ( भाग ३ मराठींत
२७. हिंदुस्थानी संगीतपद्धति ( भाग १ गुजराथींत
२८. रागचंद्रिकासार ... ... ( हिंदींत
२९. सुगमरागमाला ... ... ( ,,

**पत्रव्यवहार खालील पत्त्यावर करा**

पत्ता:-भालचंद्र सीताराम सुकथनकर, एम्.
२ मलबार

॥ श्रीः ॥

आर्यसंगीतसंस्कृतग्रंथाः

# १ रागतरंगिणी ।

# २ रागतत्त्वविबोधः ।

# ३ रागमंजरी ।


प्रकाशक

भालचन्द्र सीताराम सुकथनकर, एम्.ए., एल्.एल्. बी.

शके १८[illegible] सन १९१८




50/.

॥ श्रीः ॥

श्रीलोचनपंडितविरचित।

# रागतरंगिणी।

एतत्पुस्तकम्

पुण्यपत्तनस्थपंडितदत्तात्रेयकेशवजोशीत्यभिधेन

यथामति संशोधितम्।

तच्च

भालचन्द्रशर्मणा

आर्यभूषणाख्यमुद्रालये मुद्राक्षरैरंकयित्वा

प्राकाश्यं नीतम्।

शकः १८४० सन् १९१८

अस्य ग्रन्थस्य मुद्रणे यद्धनमपेक्षितं तत्सकलमपि
श्रीमन्महीशूरयुवराजमहाशयैः 'सर के. नरसिंह–
राज वडियार जी. सी. आय्. ई.'
इति लक्षणांकितैः परमो–
दारचरितैरदायि ।

Printed at the Arya-Bhushan Press, Poona, City,
by Anant Vinayak Patvardhan,

AND

Published by Bhalchandra Sitaram Sukthankar, M. A, LL. B.,
at 2 Malabar Hill, Bombay.

# प्रस्तावना.

हिंदुस्थानी अथवा उत्तरेकडील संगीत पद्धतीच्या उपलब्ध संस्कृत ग्रंथांपैकीं लोचनपंडितानें लिहिलेला रागतरंगिणी हा एक ग्रंथ आहे. या ग्रंथकारानें आणखीही कांहीं ग्रंथ लिहिले आहेत, असें या ग्रंथांतल्या एक दोन ठिकाणच्या उक्तींवरून दिसून येतें. हा तरंगिणी ग्रंथ मुख्यतः छंदःशास्त्रावर आहे असें समजतें. त्याची हस्तलिखित प्रत अलाहाबादचे श्री. गुप्ताबाबू यांजकडे होती. त्या नकलेंतून संगीत-विषयक भाग आमचे मित्र पंडित श्रीकृष्ण जोशी, गव्हर्मेंट पेन्शनर व हल्लीं नाभासंस्थानचे होममेंबर, यांनीं उतरून घेऊन आम्हांस मेहेरबानी करून प्राप्त करून दिला याबद्दल आम्ही त्या पंडितांचे फार आभारी आहों. मूळ ग्रंथ मिथिल व संस्कृत या भाषांत आहे असे ते पंडित सांगतात.

तरंगिणीकारानें स्वतःविषयीं माहिती ग्रंथांत दिलेली नाहीं. ग्रंथाच्या शेवटीं दिलेल्या " भुजवसुदशमितशाके " इत्यादि आर्येनें ग्रंथकाराचा काल ठरवूं म्हटलें तर तो शक १०८२ होतो. परंतु तो काळ खरा मानण्यास कांहीं अडचणी उत्पन्न होतात. त्या अशा; ग्रंथकारानें आपल्या 'तरंगिणी' ग्रंथांत विद्यापतीच्या श्लोकांचीं उदाहरणें आपले छंद समजावितांना दिलीं आहेत. हा लोकप्रिय कवि इ. स. १४०० च्या पूर्वींचा नाहीं, असें पुराणवस्तुसंशोधकांचें मत आहे. ते शोधक ताम्रपटादिकांच्या साहाय्यानें असें ठरवितात कीं, इ. स. १३९९ मध्यें मिथिलाधिप शिवसिंह यानें विद्यापति कवीस जहागीर दिल्याचा पुरावा आहे. या पुराव्यावरून लोचनपंडित इ. स. १४०० च्या पूर्वींचा नसावा हें उघड आहे. तसेंच 'हृदयनारायणदेव' या नांवाच्या गढादेशच्या राजानें 'रागतरंगिणी' या ग्रंथाचा उपयोग 'हृदयकौतुक' या आपल्या ग्रंथांत केला आहे असें आम्हीं त्या ग्रंथाच्या प्रस्तावनेंत म्हटलेंच आहे. व त्या राजाचा काल इ. स. १६६७ असावा असेंही

आम्हीं तेथें म्हटलें आहे. तेव्हां रागतरंगिणी हा ग्रंथ इ. स. १४०० शेंनंतर व इ. स. १६६७ पूर्वी लिहिला गेला असावा असें सहज ठरवितां येतें. तेव्हां लोचनपंडिताचा 'भुजवसु' इ. हा श्लोक लावावा कसा अथवा त्यांत कांहीं चुकलें आहे कीं काय हें एक मनोरंजक गूढ आहे. 'रागतरंगिणी' ग्रंथांत ईमन, फरोदस्त वगैरे स्पष्ट मुसलमानी रागनामेंही दृष्टीस पडतात, ही गोष्ट ग्रंथकाल निर्णित करण्यास कांहींशी उपयोगी होईल. कारण, मुसलमानी राजांची कारकीर्द या देशांत स्थापिली जाऊन त्यांचे राग सर्वत्र लोकप्रिय होण्यास शके १०८२ हा काल अनुकूल होईल कीं कसें, हाहि विचार करण्याजोगा प्रश्न आहे.

लोचनपंडितानें 'भुजवसुदशमितशाके' या श्लोकाच्या शेवटीं " मुनयस्त्वासन् विशाखायाम् " असें म्हटलें आहे; व अशाप्रकारें कालगणनेची वहिवाट काश्मीर प्रांताकडे अजून देखील आहे असें ऐकिवांत आहे. तसेंच मिथिला व बंगाल या प्रांतांतला घटिकावाचक शब्द जो " दण्ड " तोही त्यानें आपल्या ग्रंथांत वापरला आहे. यावरून सदर पंडित उत्तरेचा असावा असें अनुमान करण्यास पुष्कळ जागा आहे.

लोचनपंडितानें आपला ग्रंथ सुबोध व सरळ लिहिला आहे; त्यास दक्षिणेकडील ग्रंथ माहीत होते असें दिसतें. कारण, त्याच्या ग्रंथांत कैशिक, काकली व मृदुपंचम हीं नांवें दृष्टीस पडतात. त्यानें या ग्रंथांत जन्यजनकरागांची व्यवस्था सुबोध करून दाखविली आहे. एकंदरींत हा ग्रंथ संगीतशास्त्राचा अभ्यास करणाऱ्यांस उपयुक्त होईल असें आम्हांस वाटतें.

ह्या ग्रंथाचा कालनिर्णय करण्याचे कामीं आमचे मित्र डॉ० विष्णु सीताराम सुकथनकर, एम्. ए., पीएच्. डी., यानीं जें आम्हांस साहाय्य केलें त्याबद्दल आम्हीं त्यांचे फार आभारी आहों.

पुणें,
ता० २२।६।१८ } पंडित दत्तात्रेय केशव जोशी.

॥ श्रीः ॥

# रागतरंगिणी ।

श्रीगणेशाय नमः ।

अथैषामुत्पत्तिनिदानं नादो निरूप्यते ।

नादः ।

नाभेरूर्ध्वं हृदिस्थानान्मारुतः प्राणसंज्ञकः ।
नदति ब्रह्मरन्ध्रान्ते तेन नादः प्रकीर्तितः ॥
आकाशाग्निमरुज्जातो नाभेरूर्ध्वं समुच्चरन् ।
मुखेऽतिव्यक्तिमायाति यः स नाद इतीरितः ॥
स च प्राणिभवोऽप्राणिभव उभयसंभवः ।
आद्यः कायभवो वीणादिभवोऽपि द्वितीयकः ॥
तृतीयोऽपि हि वंशादिभव इत्थं त्रिधामतः ।
यदुक्तं ब्रह्मणस्थानं ब्रह्मग्रन्थिश्च यो मतः ॥
तन्मध्ये संस्थितः प्राणः प्राणाद्वह्निसमुद्भवः ॥
न नादेन विना गीतं न नादेन विना स्वरः ।
न नादेन विना ज्ञानं न नादेन विना शिवः ॥

एतादृशनादमयमूर्छनाधीना च रागोत्पत्तिः ।

तदुक्तं स्वरः सम्मूर्छयते यत्र रागतां प्रतिपद्यते ।

मूर्छना च गीयमानगीते क्वचिज्जायते इति गीतं निरूप्यते । तंत्राभियुक्ताः ।

गीतम् ।

धातुमातुसमायुक्तं गीतमित्युच्यते बुधैः ।
तत्र नादात्मको धातुर्मातुरक्षरसंभवः ॥

अत एव केवलाक्षरसंचये गीतव्यवहारो मातुरिति मन्तव्यम् ।

तच्च गीतं द्विविधम् ।

गीतं तु द्विविधं प्रोक्तं यंत्रगात्रविभेदतः ।
यंत्रं स्याद्वेणुवीणादि गात्रं तु मुखमुच्यते ॥

प्रत्येकमेतदपि द्विविधम्।

निबद्धमनिबद्धं च गीतं द्विविधमुच्यते।
अनिबद्धं भवेद्गीतं वर्णादिनियमैर्विना॥
यद्वा गमकधात्वंगवर्णादिनियमैर्विना।
निबद्धं च भवेद्गीतं तालमानरसाश्रितम्॥
छंदो गमकधात्वंगवर्णादिनियमैः कृतम्।

गमकाः कंपितादयः। धातुर्नादः। अंगानि पदानि। तेन बिरुदादीनि। तालाश्च चञ्चत्पुटचाचपुटादयः। मानं तु प्रसिद्धम्। रसाः शृंगारादयः। छंदांसि एलाझुंबकादीनि।

एतेषां प्रपंचस्तु मत्कृतरागसंगीतसंग्रहेऽन्वेष्टव्यः।

तादृशमपि गीतं द्विविधम्।

मार्गदेशी विभेदेन गीतं तु द्विविधं मतम्।

मार्गास्तु गंधर्वादिगीतगतयः। देश्यश्च तत्तद्रागाश्रितास्तास्तास्तत्तद्देशगीतगतयः। इह तु मार्गाभावान्नोदाहृताः। अग्रे तु क्वचिदुदाहर्तव्याः देश्यामपि स्वदेशीयत्वात्प्रथमं मिथिलापभ्रंशभाषया श्रीविद्यापतिकविनिबद्धास्तास्ता मैथिलगीतगतयः प्रदर्श्यन्ते॥*

× × × ×

## अथ यंत्रजादिरागसामान्योत्पत्त्युपयुक्तसंस्थितिसाधनीभूतस्वरसंज्ञाप्रकरणम्।

स्वस्वशेषश्रुतिं त्यक्त्वा यदा रिषभधैवतौ।
गीयेते गुणिभिः सर्वैस्तदा तौ कोमलौ मतौ॥
गृह्णाति मध्यमस्यापि गांधारः प्रथमां श्रुतिम्।
यदा तदा जनैरेष तीव्र इत्यभिधीयते॥

---

*टीपः—येथें ग्रंथकारानें श्रीविद्यापतीचीं मिथिलभाषेंतील गीतें दिलीं आहेत; परंतु ग्रंथ जण्यास त्यांचा उपयोग नसल्यानें तीं येथें दिलीं नाहींत.

द्वितीयामपि चेदेवं तदा तीव्रतरः स्मृतः ।
तृतीयामपि चेदेवं तदा तीव्रतमः स्मृतः ॥
चतुर्थीमपि चेदेवमतितीव्रतमः स्मृतः ।
अतितीव्रतमो गस्तु सारंगे परिगीयते ॥
षड्जस्य च निषादश्चेद् गृह्णाति प्रथमां श्रुतिम् ।
तदा संगीतिभिः सोऽपि तीव्र इत्यभिधीयते ॥
द्वितीयामपि चेदेवं तदा तीव्रतरः स्मृतः ।
तृतीयामपि चेदेवं तदा तीव्रतमः स्मृतः ॥
षड्जस्य द्वे श्रुती गृह्णन् निषादः काकली स्मृतः ।
तीव्रतरे निषादैव गेया सैव विचक्षणैः ॥
सपयो रिधयोश्चैव तथैव गनिषादयोः ।
संवादः कथितो विज्ञैर्मसयोः स्वरयोर्मिथः ॥
हृदि मंद्रो गले मध्यो मूर्ध्नि तार इति क्रमात् ।
द्विगुणः पूर्वपूर्वस्मात् स्वरः स्यादुत्तरोत्तरः ॥
× × × श्रुतिनामानि तीव्राकुमुद्वती इ.
वीणायां सर्वरागाणां स्वराणां संस्थितिस्तु या ।
तस्या वादनमात्रेण स्वरव्यक्तिः प्रजायते ॥
तास्तु संस्थितयः प्राच्यो रागाणां द्वादश स्मृताः ।
याभीरागाः प्रगीयन्ते प्राचीना रागपारगैः ॥
भैरवी टोडिका तद्वत् गौरी कर्णाट एव च ।
केदार इमनस्तद्वत् सारंगो मेघरागकः ॥
धनाश्रीः पूरवी किंच मुखारी दीपकस्तथा ।
एतेषामेवसंस्थाने सर्वे रागा व्यवस्थिताः ॥
तत्र यद्रागसंस्थाने ये ये रागा व्यवस्थिताः ।
यथा यद्रागसंस्थानं तत्तथैव वदाम्यहम् ॥

इति संस्थानसंज्ञा प्रकरणम् ।

## ( १ ) भैरवी ।

शुद्धाः सप्तस्वरा रम्या वादनीयाः प्रयत्नतः ।
तेन वादनमात्रेण भैरवी जायते शुभा ॥
अन्ये तु भैरवीरागे धैवतं कोमलं विदुः ।
तदशुद्धं यतस्तादृक् नायं रागोऽनुरंजकः ॥

## ( २ ) टोडी ।

शुद्धाः सप्तस्वराः कार्या रिधौ तेषुच कोमलौ ।
टोडी सुरागिणी ज्ञेया ततो गायकनायकैः ॥

## ( ३ ) गौरी ।

एवं सति च गांधारो द्वे श्रुती मध्यमस्य चेत् ।
गृह्णाति काकली निः स्यात् तदा गौरी प्रवर्तते ॥

अस्यार्थः– रिषभधैवतौ कोमलौ भवतः । गांधारश्च मध्यमस्य श्रुतिद्वयं गृह्णाति । निषादश्च षड्जस्य श्रुतिद्वयं गृह्णाति । तदा गौरी संस्थानं भवति ॥

## ( ४ ) कर्णाटः ।

शुद्धाः सप्तस्वरास्तेषु गांधारो मध्यमस्य चेत् ।
गृह्णाति द्वे श्रुती गीता कर्णाटी जायते तदा ॥

अस्यार्थः–शुद्धेषु सप्तस्वरेषु गांधारो मध्यमस्य श्रुतिद्वयं गृह्णाति तदा कानराख्यातं कर्णाटसंस्थानं भवति ।

## ( ५ ) केदारः ।

एवं सति निषादश्चेत् काकली भवति स्फुटम् ।
वीणायां व्यक्तिमाधत्ते केदारसंस्थितिस्तदा ॥

अस्यार्थः– गांधारो मध्यमस्य श्रुतिद्वयं गृह्णाति । निषादश्च षड्जस्य श्रुतिद्वयं गृह्णाति तदा केदारसंस्थानं भवति ॥

(६) ईमनः ।

एवं सति च संस्थाने मध्यमः पंचमस्य चेत् ।
गृह्णाति द्वे श्रुती राग ईमनो जायते तदा ॥

अस्यार्थः—गांधारो मध्यमस्य श्रुतिद्वयं गृह्णाति । निषादश्च षड्जस्य श्रुतिद्वयं गृह्णाति । मध्यमः पंचमस्य श्रुतिद्वयं गृह्णाति तदा ईमनसंस्थानं भवति ।

(७) सारंगः ।

एवं सति च गांधारः शुद्धमध्यमतां व्रजेत् ।
धश्च शुद्धनिषादः स्यात् सारंगो जायते तदा ॥

(८) मेघः ।

धनिषादौ च शार्ङ्गस्य कर्णाटस्य गमौ यदि ।
भवेतां रागराजन्यो मेघरागः प्रजायते ॥

अस्यार्थः— गांधारो मध्यमस्य श्रुतिद्वयं गृह्णाति । मध्यमः पञ्चमस्य श्रुतिद्वयं गृह्णाति । निषादः षड्जस्य श्रुतिद्वयं गृह्णाति । मध्यमः शुद्धो भवति । तदा मेघसंस्थानं भवति ।

(९) धनाश्रीः ।

रिषभः कोमलो गस्तु द्वे श्रुती मध्यमस्य चेत् ।
गृह्णाति द्वे श्रुती मश्च पञ्चमस्य विशेषतः ॥
धैवतः कोमलो निश्च षड्जस्य द्वे श्रुती यदा ।
गृह्णाति रागिणी रम्या धनाश्रीर्जायते तदा ॥

अस्यार्थः— रिषभधैवतौ कोमलौ भवतः। गांधारो मध्यमस्य श्रुतिद्वयं गृह्णाति । मध्यमः पंचमस्य श्रुतिद्वयं गृह्णाति । निषादः षड्जस्य श्रुतिद्वयं गृह्णाति । तदा धनाश्रीसंस्थानं भवति ॥

(१०) पूर्वा ।

ईमनस्वरसंस्थाने निषादप्रथमां श्रुतिम् ।
गृह्णाति धैवतश्चैषा पूर्वायाः स्वरसंस्थितिः ॥

अस्यार्थः– गांधारो मध्यमस्य श्रुतिद्वयं गृह्णाति। मध्यमः पंचमस्य श्रुतिद्वयं गृह्णाति। निषादः षड्जस्य श्रुतिद्वयं गृह्णाति। धैवतश्च निषादस्यैकां श्रुतिं गृह्णाति। तदा पूर्वासंस्थानं भवति॥

( ११ ) मुखारी।

शुद्धाः सप्तस्वरास्तेषु धैवतः कोमलो भवेत्।
वीणायां जायते शुद्धा मुखारी संस्थितिस्तदा॥

अस्यार्थः– शुद्धसप्तस्वरेषु चेद्धैवतः कोमलो भवति। तदा मुखारीसंस्थितिर्भवति।

( १२ ) दीपकः।

सर्वैर्मिलित्वा दीपकोऽपि लेख्यः॥

---

जन्यरागाः।

भैरवीसंस्थितौ।

नीलांबरी सदा गेया भैरवीरागिणीस्थितौ।

---

टोडीसंस्थितौ।

टोडी सुरागिणी कापि स्वस्थितौ सैव गीयते।

---

गौरीसंस्थितौ।

मालवः स्यान्गुणमयः श्रीगौरी च विशेषतः।
चैतीगौरी तथा प्रोक्ता पहाडीगौरिका पुनः॥
देशीटोडी देशकारो गौरो रागेषु सत्तमः।
त्रिवणः स्यान्मूलतानीधनाश्रीश्च वसंतकः॥
गौरा भैरवरागश्च विभासो रागसत्तमः।
रामकली तथागेया गुर्जरी बहुली ततः।
रेवा च भटियारश्च पड्रागश्च थोत्तमः॥

मालवः पंचमः किंच जयतश्रीश्च रागिणी ।
आसावरी तथा ज्ञेया देवगांधार एव च ॥
सिंधीआसावरी ज्ञेया ज्ञेया गुणकरी तथा ।
गौरीसंस्थानमध्ये तु एते रागा व्यवस्थिताः ॥

---

कर्णाटसंस्थितौ ।

षाडवः कानरो रागो देशी विख्यातिमागतः ।
वागीश्वरीकानरश्च खंमाइची तु रागिणी ॥
सोरठः परजो मारू जैजयंती तथा परा ।
ककुभोऽपि च कामोदः कामोदी लोकमोदिनी ॥
केदारी रागिणी  या गौरः स्यात् मालकौशिकः ।
हिंदोलः सुघराई स्यादडानो रागसत्तमः ॥
गारेकानरनामा च श्रीरागश्च सुखावहः ।
कर्णाटसंस्थितावेते रागाः सन्तीति निश्चितम् ॥

---

केदारसंस्थाने ।

केदारस्वरसंस्थाने श्रुतः केदारनाटकः ।
आभीरनाटनामा च गेयो रागस्तथापरः ॥
खंबावती ततो ज्ञेया शंकराभरणस्तथा ।
विहागराच हम्बीरः श्यामः श्रुतिमनोहरः ॥
छायानटश्च भूपाली ज्ञेया भीमपलासिका ।
कौशिकश्च तथा गेयो मारू रागो विचक्षणैः ॥

ईमनसंस्थाने ।

ईमनस्वरसंस्थाने शुद्धकल्याण ईरितः ।
पूरिया विदिता लोके जयत्कल्याण एव च ॥

---

सारंगसंस्थाने ।

सारंगस्वरसंस्थाने प्रथमा पटमंजरी ।
वृंदावनी तथा ज्ञेया सामंतो बडहंसकः ॥

मेघसंस्थाने ।

मेघरागस्य संस्थाने मेघो मल्लार एव च ।
गौडसारंगनाटौ च रागो वेलावली तथा ॥
अलहिया तथा ज्ञेया शुद्धसूहव एव च ।
देशीसूहवदेशाखौ शुद्धनाटस्तथैव च ॥

धनाश्रीसंस्थाने ।

धनाश्रीस्वरसंस्थानेधनाश्रीर्ललितस्तथा ।

पूर्वासंस्थाने ।

पूर्वायाः स्वरसंस्थाने पूर्वैवपरिगीयते ॥

मुखारी संस्थाने ।

मुखारीस्वरसंस्थाने मुखारी परिगीयते ।

सर्वेषामथ रागाणां ये येऽनुक्रमतः स्वराः ।
तेषु सर्वस्वरेष्वाद्यः षड्ज इत्यभिधीयते ॥

तथाहि—

सारिगा मपधा निः सः सानिधपमगा रिसौ ।
रोहावरोहयोगेन संपूर्णा भैरवी मता ॥

एवं तत्तद्रागस्वरारोहावरोहास्त्वन्यत्र द्रष्टव्याः । इह तु विस्तरभयान्न लिखिताः ॥

अथ सकलदेशसाधारणगुणिगणप्रसिद्धरागसंकराः ।

श्रीमद्वेलावलात् गुंडयोगात् कामोदपंचकम् ।
तत्राद्यः, शुद्धयोगात्तु द्वितीयोऽपि च वक्ष्यते ॥
कामोदकेदारियोगात् सामंताख्यो भवेत्स तु, ।
तिलकादिकषड्रागयोगात्तु तिलकादिकः, ॥
कल्याणाद्यो भवेत् गुंडश्रामदीमनयोगतः, ।
वरारी गुर्जरी गौरी श्यामा चासावरीति च ॥

गांधारसंयुता एताः स्युः षड्राग इतीरितः, ।
गुर्जर्यासावरीयोगाच्छ्रीमद्गुणकरी मता, ॥
शिवराट्मिलनादन्या धन्नाश्रीः कुम्मरीति च, ।
मालश्रीः शुद्धमलारैर्मधुमाधविनिर्मितिः, ॥
हरभूषणशुद्धाभ्यां नट्टनारायणेन च ।
सरस्वत्याः समुत्पत्ति, र्धनाश्रीर्मालवावलैः ॥
गौर्या च बडहंसः, स्यात् कानराद्धवलादपि ।
पूरिया रागिणी सैव मंगलाष्टकशब्दिता ॥
केदाराचलगौरीभिर्लंकादहननामकः, ।
गांधारो गुर्जरी श्यामा रामकर्याथ चेद्भवेत्, ॥
वेलावलकेदाराभ्यां योगतो हरभूषणः, ।
वेलावलकेदारककल्याणैरीमनः स्मृतः, ॥
गौरीआसावरीदेवगिरीभिर्भैरवादपि ।
सिंधुराराग्रतः प्रोक्तो गांधारः पृथिवीतले, ॥
धनाश्रीः कानरायोगात् वागीश्वर्याख्यरागिणी ।
फिरोदस्तस्तु पूरविगौरीश्यामाभिरेव च, ॥
वराडीवंगपालाभ्यां विभासमिलनादपि ।
अडानारागिणी प्रोक्ता, फिरोदस्तात् धनेन च ॥
कानडायोगतः प्रोक्ता, सहाना कापि रागिणी, ।
मारूधवलकुंमारीधनाश्रीमिलनाद्भवेत् ॥
पट्मंजरी ततः, शुद्धशंकराभरणादपि ।
मह्लारकानराभ्यां च देशाखः समुदीरितः, ॥
गौडसारंगमिलनाद्भवेत् वेलावली भुवि, ।
तत्र सोरठकौरव्यामिलनात् कौमुदी मता, ॥
मारूधवलकेदाराजयतश्रीमिलनात् भवेत् ।
घंटोलनामको रागः संगीतिभीरुरीकृतः, ॥

पूरवीशैलजादेवगिरिभिर्गुंडयोगतः ।
हारवत्याख्यसंकीर्णा रागिणी लोकदुर्लभा, ॥
धनाश्रीपूरियाभ्यां च भवेत् भीमपलासिका, ।
मालश्रीशुद्धसंयोगात् मल्लारमिलनादपि ॥
खंबावत्याः समुत्पत्तिर्वदन्ति किल गायकाः, ।
शैलजादेशकाराभ्यां टोडीतोऽपि वराडिका, ॥
षड्रागासावरीदेश्यो हेतुर्गंधावरी भवेत्, ।
सरस्वत्यथ मारुश्च केदारापि मनोहरा ॥
बिहागरासमुत्पत्तिनिदानं त्रितयं मतम्, ।
जयत्श्रीदेशकाराभ्यां ललिताद्यलिलावती, ॥
मालवाचलगौरीभिः त्रिवणामिलनान्मतः ।
गुणिगोष्ठीषु विख्यातः कोऽपि रागो मनोहरः, ॥
हंमीर ईमनात् शुद्धकेदारायोगतः स्मृतः, ।
पूर्या श्रीरागयुक्ता चेत् कानरा किंचिद्देशतः ॥
भैरवात् किंचिदादाय तदा टंकः प्रवर्तते, ।
मल्लारमिलनात् किंचित् केदारानागकध्वनिः, ॥
गूजर्या देशकारश्चेत् कल्याणोऽपि युतो भवेत् ।
अहीरी रागिणी रम्या तदैव भुवि जायते, ॥
शंकराभरणो नाटः सोरटी संगतौ यदि ।
तदा तु रभसादिः स्यान्मंगला कापि रागिणी, ॥
गांधारी गुर्जरी तद्वत् बगाली पंचमस्तथा ।
भैरवीसंयुतैरेतैर्भवेत् सौराष्ट्रनामकः, ॥
खंमारी पूरियाटोडीयोगान्नारायणो मतः, ।
मनोहरयुतस्तद्वत् मालवो राजहंसकः, ॥
मालश्रीशुद्धटंकैस्तु भवेद्भीमपलासिका, ।
श्रीमन्मालवगांधारबडहंसैर्युतो हरः ॥

पड्रागधवलहंसैर्देशीटोडीयुतैर्भवेत्, ।
पूरवी शुद्धसारंगैर्देवगिर्यपि रागिणी, ॥
कानरायुतकल्याणसंयुताचेत् बिहागरा ।
तदा तु गीतिविख्यातः रागः कोलाहलो मतः, ।
शंकराभरणोपेतमालश्रीसंयुतो यदि ।
श्रीरागः सुखदः कोऽपि भवेत् श्रीरमणस्तदा, ॥
केदारापूरवीवेलावलीभिः ककुभा मता, ।
सरस्वत्या तु कुंमारी मालश्रीयोगतोऽपि च, ॥
देवकारी भवेत् कोऽपि कदाचिच्छ्रूयते तु सा, ।
श्यामारामकरीभ्यां च श्रीमद्गांधारयोगतः ॥
बहुलोपेतगुर्जर्या मंगलोपेतगुर्जरी, ।
वराडीगौरिका चेत्यः श्रीपूर्वरमणोऽपि च ॥
एतेषां संकरात्कापि विचित्रा नाम रागिणी, ।
गौरीललितयोर्देशकारसंयोगतः किल ॥
त्रिवणानामको रागः संगीतीगीतिसत्तमः, ।
अडानाकानरावेलावलीभिर्नटपूर्वकात् ॥
नारायणात् समाख्याता कुलाई नाम रागिणी, ।
पूरियामधुमाधवीयोगाद्वागीश्वरी मता ॥
वडहंसटंकगौरीश्रीरागो रागसत्तमः ।
पूर्वाबेलावली तद्वत् ककुभापि केदारिका ॥
एषां परस्परं योगात् दक्षिणनाटोऽपि सत्तमः, ।
शंकराभरणं गौरी मधुपूर्वा च माधवी ॥

वेलावली परस्तद्वद् दहनोलंकपूर्वकः ।
नारायणो भवेद्रागः सुरलोकेऽपि दुर्लभः ॥
ललितपंचमपूर्वाभिः लीलावतिमनोहरी ।
युतौ चेत्तत्र हिंदोलः तदैव किल जायते, ॥
श्रीमत्कल्याणकामोदसामंतैर्मेघरागकः, ।
मल्लारनटसारंगास्तद्वत् वेलावली किल ॥
देवगिर्यास्तु संयोगादेतेषां पंचमः स्मृतः, ।
हिंदोलादर्धमर्धार्धं कानरारागतोऽपि च ॥
पुरियातोऽपि तावत्तु स्यात् समादाय भैरवः,
शंकराभरणात् तद्वत् कानरामधुमाधवी ॥
एतावद्योगतः प्रोक्ता कमरासत्सुखावहा ।
केदाराहिरनाटौ च शुद्धो धवल एव च ॥
वागेश्वरीकानरश्च योगात् स्यात् मधुमाधवी ।
लंकादहनसोरठीसंकरात् किल जायते ॥
शक्रसंक्रमणी नाम रागिणी तु सुखावहा ।

इति सकलसंगीतसिद्धा रागसंकराः ।

## समयाः ।

रागाणां गानकालाः । तुम्बुरुनाटके ।

श्रीपंचमीं समारभ्य यावत्स्यात् शयनं हरेः
तावद्वसंतरागस्य गानमुक्तं मनीषिभिः ॥
इंदूत्थानं समारभ्य यावद्दुर्गामहोत्सवम् ।
प्रातर्गेयस्तु देशाखो ललितः पटमंजरी ॥
विभासो भैरवी चैव कामोदो गुंडकर्यपि ।
एका वराडि मध्याह्ने सायं कर्णाटमालवौ ॥

नाटश्चैव विशेषेण शेषगेयस्तु सर्वदा ।
हिंदोलश्च वसंतश्च वसंते रक्तिदायकः ॥
नाटो गौडी वराडीच गुर्जरी देशिरेव च ।
पूर्वाह्णे गानमेतेषां निषिद्धमिति तद्विदः ॥
नैवापराह्णे गातव्यौ भैरवीललितौ कचित् ।
दशदंडात्परं रात्रौ सर्वेषां गानमीरितम् ॥
रंगभूमौ नृपाज्ञायां कालदोषो न विद्यते ।
शुद्धसालगसंकीर्णधातुमातुविभेदतः ॥
देशभाषाविभेदाश्च रागसंख्या न विद्यते ।
न रागाणां न तालानामंतः कुत्रापि विद्यते ॥
यथा काले समारब्धं गीतं भवति रंजकम् ।
अतः स्वरस्य नियमाद् रागेऽपि नियमः कृतः ॥

अर्वाचीनास्तु ।

ब्राह्मे मुहूर्ते गातव्यो भैरवो रागसत्तमः ।
अरुणोदयवेलायां गेया रामकरी पुनः ॥
प्रातर्वेलावली गेया पूर्वाह्णेसुभगोऽपि च ।
पूर्वाह्णेयाति गायेत्तां तोडी मतिमनोहराम् ॥
शंकरादौ वराडी च गेया गायकनायकैः ।
दिवा तृतीयप्रहरे गातव्यासावरी जनैः ॥
काफी मध्याह्नमध्ये तु सारंगोऽपि च गीयते ।
अपराह्णे नटो ज्ञेयस्तद्वत् गायेत्तु मालवम् ।
अपराह्णावसाने वा सायाह्ने सति याति वा ।
सायंकालस्तु कालो वै गौरीरागस्य भूतले ।
निशामुखे तु कल्याणः केदारस्तु महानिशि ॥
द्वितीयप्रहरे रात्रौ कर्णाटः सर्वसंमतः ।
तृतीयप्रहरे रात्रावडानोऽपि च गीयते ॥

अपराह्णेऽपि सौराष्ट्रः प्रभाते संगवेऽपि च ।
पंचमो मेघसंचारे मल्लारः परिकीर्तितः ॥

अलं वा बहुभिः ।

---

भुजवसुदशमितशाके—
श्रीमद्बल्लालसेनराज्यादौ ।
वर्षैकषष्टिभोगे
मुनयस्त्वासन् विशाखायाम् ॥

इति लोचनपंडितविरचिता रागतरंगिणी समाप्ता ॥

॥ शुभं भवतु ॥

समाप्तम्

# रागतरंगिणीगतस्वरपत्रकम् ।

| श्रुतिनामानि | शुद्धस्वराः | विकृतस्वराः |
|---|---|---|
| १ तीव्रा | | |
| २ कुमुद्वती | | (१२) तीव्रनिषादः तीव्रतरनिषादः काकलीनिषादः तीव्रतमनिषादः मृदुषड्जः |
| ३ मंद्रा | | |
| ४ छंदोवती | (१) षड्जः | |
| ५ दयावती | | |
| ६ रंजनी | | (८) कोमलरिषभः |
| ७ रतिका | (२) ऋषभः | |
| ८ रौद्री | | |
| ९ क्रोधा | (३) गांधारः | |
| १० वज्रिका | | |
| ११ प्रसारिणी | | (९) तीव्रगांधारः तीव्रतरगांधारः अंतरगांधारः |
| १२ प्रीतिः | | |
| १३ मार्जनी | (४) मध्यमः | |
| १४ क्षितिः | | |
| १५ रक्ता | | (१०) तीव्रतमगांधारः अतितीव्रतमगांधारः तीव्रमध्यमः तीव्रतरमध्यमः तीव्रतममध्यमः मृदुपंचमः |
| १६ संदीपिनी | | |
| १७ आलापिनी | (५) पंचमः | |
| १८ मदंती | | |
| १९ रोहिणी | | (११) कोमलधैवतः |
| २० रम्या | (६) धैवतः | |
| २१ उग्रा | | |
| २२ क्षोभिणी | (७) निषादः | |

# रागतरंगिणीगतजनकजन्यरागपत्रकम् ।

| संस्थाननामानि. | | जन्यरागनामानि. |
| --- | --- | --- |
| १ भैरवी | (१) | भैरवी, नीलांबरी. |
| २ टोडी | (१) | टोडी. |
| ३ गौरी | (२७) | गौरी, मालवः, श्रीगौरी, चैतीगौरी, पहाडीगौरी, देशीटोडी, देशकारः, गौडः, त्रिवणः, मूलतानीधनाश्रीः, वसंतकः, गौरा, भैरवः, विभासः, रामकली, गुर्जरी, बहुली, रेवा, भटियारः, षट्रागः, मालश्रीः, पंचमः, जयतश्रीः, आसावरी, देवगांधारः, सिंधीआसावरी, गुणकरी. |
| ४ कर्णाटः | (२०) | कर्णाटः, कानरः, देशी, वागीश्वरीकानरः, खमाइची, सोरटः, परजः, मारूः, जैजयंती, ककुभः, कामोदः, कामोदी, केदारी, गौरः, मालकौशिकः, हिंडोलः, सुघराई, अडानः, गारेकानरः, श्रीः. |
| ५ केदारः | (१३) | केदारः, केदारनाटकः, आहीरनाटः, खंबावती, शंकराभरणः, विहागरा, हंमीरः, श्यामः, छायानट्टः, भूपाली, भीमपलासिका, कौशिकः, मारूः. |
| ६ ईमनः | (४) | ईमनः, शुद्धकल्याणः, पूरिया, जयत्कल्याणः. |
| ७ सारंगः | (५) | सारंगः, पटमंजरी, वृंदावनी, सामंतः, वडहंसकः. |
| ८ मेघः | (१०) | मेघः, मल्हारः, गौडसारंगः, नाटः, वेलावली, अलहिया, शुद्धसूहवः, देशीसूहवः, देशाखः, शुद्धनाटः. |
| ९ धनाश्रीः | (२) | धनाश्रीः, ललितः. |
| १० पूर्वी | (१) | पूर्वी. |
| ११ सुखारी | (१) | सुखारी. |
| १२ दीपकः | (१) | दीपकः. |